१ त्रीणि आत्मनः, २ त्रीणि गुणानाम्, ३ षड् भाग्यस्य ४ द्वे मूलकारणस्य, ५ कारणस्य त्रीणि, ६ षड् नामानि जन्मन· ७ षट्नामानि प्राणिन , ८ सप्त नामानि मनस —

क्षेत्रज्ञ पुरुषावात्मा तमः सत्त्व रजोगुणाः ॥३१॥
भाग्य दिष्ट भागधेय दैवं स्त्री नियति विंधिः ।
स्यान्निदान मूलबीजं हेतुर्ना बीजकारणे ॥३२॥
उत्पत्तौ जननं जन्म जनुर्जनि समुद्भवौ ।
शरीरी चेतनः प्राणो जन्तुर्जीवी च जन्मिनि ॥३३॥
हृदय मानस चित्त हृन्मनः स्वान्त चेतसी ।
उक्तं कोषविदायत्तन्मयाप्यत्र प्रकीर्तितः ॥३४॥

---

॥ इति समयवर्ग समाप्त· ॥

हिन्दी—(१) आत्मा के तीन नाम–क्षेत्रज्ञ १, पुरुष २, आत्मा ३ पु० । (२) गुण के तीन नाम–तमस् १, सत्त्व २, रजस् ३ नपु० । (३) भाग्य के छ नाम–भाग्य १, दिष्ट २, भागधेय ३, दैव ४ नपुं०, नियति ५, स्त्री०, विधि० ६ पु० (४) मुख्यकारण के दो नाम–निदान १मूलबीज २नपु० । (५) कारण के तीन नाम–हेतु १ पु०, बीज २, कारण ३ नपु० । (६) जन्म के छ नाम–उत्पत्ति १, जनन २, जन्मन् ३ नपु० (जन्म अदन्त अस्त्री०) जनुष् ४ नपुं०, जनि ५ स्त्री० समुद्भव ६ पु० । (७) शरीरी के छ नाम–शरीरिन् १, चेतन २, प्राणिन् ३, जन्तु ४, जीविन् ५, जन्मिन् ६ पु० । (८) मन के सात नाम -हृदय १, मानस २, चित्त ३, हृत् ४, मनस् ५, स्वान्त ६ चेतस् ७ नपु० ।

॥ समयवर्ग समाप्त ॥

## ॥ अथ मतिवर्गः प्रारभ्यते ॥

१ बुद्धे सप्तनामानि, २ बुद्धेश्च चत्वारो भेदाः, ३ मनोव्यापारस्यैकम्, ४ धारणावती बुद्धे एकम्, ५ तर्कस्य त्रीणि, ६ विचारस्यैकम्, ७ सन्देहस्य त्रीणि, ८ द्वे समाधानस्य ९ भावनायास्त्रीणि–

मतिर्धीर्धिषणाबुद्धिः शेमुषी चेतनाऽपि च ।
मनीषौ-त्पत्तिकी ज्ञेया ततो वैनयिकी मता ॥१॥
कर्मजा सा तृतीया तु चतुर्थी पारिणामिकी ।
मनस कर्मसङ्कल्पो मेधा तु धारणा धियः ॥२॥
तर्कोऽध्याहरऊहस्तु विचारे च विचारणा ।
सशंयो विचिकित्सा स्त्री सन्देहः पुसि कीर्तितः ॥३॥
अवधानं समाधानं द्वयमुक्त नपुंसके ।
विमर्शो भावना चैव वासनापि निगद्यते ॥४॥

---

हिन्दी—(१) बुद्धि के सात नाम—मति १, धी २, धिषणा ३बुद्धि ४ शेमुषी ५, चेतना ६, मनीषा ७ स्त्री० । (२) बुद्धि के चार भेदो का नाम—औत्पत्तिकी १, वैनयिकी २, कर्मजा ३ पारिणामिकी ४ स्त्री० । (३) मनोव्यापार का एक नाम—सकल्प १पु० । (४) धारणा रखने वाली बुद्धि का एक नाम—मेधा १ स्त्री० । (५) तर्क के तीन नाम—तर्क १, ऊह २, अध्याहार ३पु० (६) विचार का एक नाम—विचारणा १ स्त्री० । (७) सन्देह के तीन नाम—सशय १, सन्देह पु०, विचिकित्सा ३ स्त्री० । (८) समाधान के दो नाम—अवधान १ समाधान २ नपु०। (९) भावना के तीन नाम—विमर्श १ पु०, भावना २, वासना ३ स्त्री० ।

१ असत् शास्त्रिनः एकम् , २ द्वे निश्चयस्य, ३ द्वे सिद्धान्तस्य, ४ एकं द्रोहचिन्तनस्य, ५ त्रीणि भ्रमरस्य, चत्वारि स्वोकारस्य, ७ एक मोक्षबुद्धे , ८ एकं लौकिककलाया , ९ मोक्षस्याष्टौ १०, पञ्चरसा ११ इद्रियाणां विषयाः पञ्च १२ पञ्च कर्णादीनि इन्द्रियाणि—

मिथ्यादृष्टिरसच्छास्त्री निर्णयो निश्चयः पुमान् ।
उभौ सिद्धान्त राद्धान्तौ द्वेषोहि द्रोहचिन्तनम् ॥५॥
अतद् वस्तुनि तज्ज्ञाने भ्रान्तिर्मिथ्यामति भ्रमः ।
अङ्गीकारेऽभ्युपगमः स्वीकारः स्वीकृतिस्तथा ॥६॥
मोक्षबुद्धिर्भवेज्ज्ञानं विज्ञानं शिल्पशास्त्रता ।
पुसि मोक्षोपवर्गश्च स्त्रिया मुक्तिर्नपुसके ॥७॥
निर्वाणाऽमृतकैवल्य श्रेयो निःश्रेयसान्यपि ।
तिक्तः कटुः कषायोऽम्लो मधुरश्च रसा इमे ॥८॥
शब्दाद्याविषयाः पञ्च कर्णादीनीन्द्रियाण्यमौ ।

---

हिन्दी-(१) सत् शास्त्र को नहीं मानने वाले का एक नाम-मिथ्यादृष्टि १ पु० । (२) निश्चय के दो नाम—निर्णय १, निश्चय २ पु० । (३) सिद्धान्त के दो नाम—सिद्धान्त १ राद्धान्त २पु० । (४) द्रोहचिन्तन का एक नाम—द्वेष १ पु० । (५) भ्रान्ति के तीन नाम—भ्रान्ति १ मिथ्यामति २ स्त्री०, भ्रम ३पु० । (६) स्वीकार के चार नाम—अंगीकार १, अभ्युपगम २ स्वीकार ३ पु०, स्वीकृति ४ स्त्री० । (७) मोक्ष में बुद्धि को रखने का एक नाम—ज्ञान १ नपुं० । (८) लौकिक कला का एक नाम—विज्ञान १ नपुं० । (९) मोक्ष के आठ नाम—मोक्ष १, अपवर्ग २ पु०, मुक्ति ३ स्त्री०

१ द्वे घर्षणोत्थगन्धस्य, २ द्वे इष्टगन्धस्य, ३ द्वे दुर्गन्धस्य, ४ एक मासगन्धस्य, ५ एकादश शुक्लवर्णस्य, ६ द्वे कपोतवर्णस्य, ७ द्वे धूसरवर्णस्य ८ सप्तनामानि कृष्णवर्णस्य, ९ द्वे पीतवर्णस्य, १० त्रीणि हरितवर्णस्य—

गन्धौ परिमलाऽऽमोदौ मर्दनोत्थमनोहरौ ॥९॥
इष्टगन्धस्तु सुरभिः सुगन्धिरपि गीयते ।
दुर्गन्धौ पूतिगन्धस्तु विस्रं च मासगन्धके ॥१०॥
अथ शुक्लोऽवदातश्च शुभ्रश्च धवलः सितः ।
श्वेतो गौरोऽवलक्षाश्चाऽर्जुन पाण्डरपाण्डवः ॥११॥
कापोतस्तु कपोताभः स्वल्पपीतस्तु धूसरः ।
कालेकृष्णाऽसितश्याम नीलश्यामलमेचकाः ॥१२॥
हारिद्रः पीत आख्यातः पालाशो हरितो हरित् ।

निर्वाण ४, अमृत ५, कैवल्य ६, श्रेयस् ७, नि श्रेयस् ८ नपुं० । (१०) रस के पाच नाम—तिक्त १, कटु २, कषाय ३ अम्ल ४, मधुर ५ पु० । (११) इन्द्रिय के विषय के पाच नाम—शब्द १ पु० रूप २ नपु०, गन्ध ३, रस ४ स्पर्श ५ पु० । (१२) वही कर्ण आदि पाच इन्द्रिया है ।

हिन्दी-(१) घर्षण से उत्पन्न गध के दो नाम—परिमल १, आमोद २ पु० । (२) इष्ट गध के दो नाम—सुरभि १ सुगन्धि २ पु० । (३) दुर्गन्ध के दो नाम—दुर्गन्ध १, पूतिगन्ध २ पु० । (४) मास के गध का एक नाम—विस्र १ नपु० । (५) शुक्ल वर्ण के ग्यारह नाम—शुक्ल १, अवदात २ शुभ्र ३ धवल ४ सित ५,

१ त्रीणि रक्तवर्णस्य, २ एक रक्तश्वेतस्य, ३ एकं पीतरक्तस्य ४ बालसन्ध्याप्रभस्यैकम् ५ कपिलवर्णस्य षट्, ६ कृष्णलोहिताभ्या सगतस्य द्वे, ७ नानावर्णत्रत पञ्च, ८ विशेष्यनिघ्नाः ९ गुणस्यैकम्—

रक्ते लोहित शोणौ तु श्वेतरक्ते च पाटलः ॥१३॥
पिञ्जरः पीतरक्तो यो बालसन्ध्या प्रभोऽरुणः ।
पिशङ्ग पिङ्ग कपिल कडाराः कद्रु पिङ्गलौ ॥१४॥
कृष्णलोहित वर्णे तु पुमांसौ धुम्र धूमलौ ।
कर्बुरे चित्रकिर्मीर कल्माष शवला स्त्रिषु ॥१५॥
गुणि लिङ्गा इमे प्रोक्ता गुणाः पुंसि तु केवलम् ।

॥ इति मतिवर्गः समाप्तः ॥

---

श्वेत ६, गौर ७, अवलक्ष ८, अर्जुन ९, पाण्डर १०, पाण्डु ११ पु० । (६) कपोतवर्ण के दो नाम—कपोताभ १ कापोत २ पु० । (७) धूसरवर्ण के दो नाम—स्वल्पपीत १, धूसर २ पु० । (८) कृष्ण वर्ण के सात नाम—काल १, कृष्ण २ (शिति) असित ३ श्याम ४ नील ५, श्यामल ६ मेचक ७ पु० । (९) पीतवर्ण के दो नाम—हारिद्र १ पीत २ पु० (१०) हरितवर्ण के तीन नाम—पलाश १ हरित २ हरित् ३ पु० ।

हिन्दी—(१) रक्त वर्ण के तीन नाम—रक्त १ लोहित २ शोण ३ पु० । (२) श्वेत रक्त का एक नाम—पाटल १ पु० । (३) पीत रक्त का एक नाम—पिञ्जर १ पु० । (४) बालसन्ध्या सदृशवर्ण का एक नाम—अरुण १ पु० । (५) कपिल वर्ण के छ

—॥००॥ अथ वाणीवर्ग प्रारभ्यते ॥००॥—

१ वाण्याः सप्त, २ त्रीणि आगमस्य, ३ चत्वारि वचनस्य, ४ त्रीणि क्रियाया ५ एकं सुबन्ततिङ्न्तचयस्य, ६ द्व वेदस्य, ७ द्वे त्रय्या, ८ षड्वेदाङ्गानिऽ ९ द्वे प्रणवस्य

अथ वाणी वर्गः प्रारभ्यते—

वाणीर्गीर्भारती भाषा ब्राह्मी वाक् च सरस्वती ।
आगमो वाक्यमाप्तानां सूत्रं शास्त्र प्रचक्षते ॥१॥
लपितं भाषित लोके वचनं वच उच्यते ।
कृतिः क्रिया प्रयत्नश्च वाक्य तु सुप्तिङा चयः ॥२॥
ऋक् स्त्रियां सामयजुषी श्रुतिर्वेदास्त्रयस्त्रयी ।
शिक्षाकल्पो व्याकरण निरुक्त छन्द ज्योतिषी ॥३॥
षडङ्गानि तु वेदस्य ॐकारः प्रणवः स्मृतः ।

नाम—पिशङ्ग १ पिंग २, कपिल ३, कडार ४, कद्रु ५, पिशङ्ग ६ पु० । (६) कृष्णलोहित वर्ण के दो नाम—धूम्र १ धूमल २ पु० । (७) नानावर्ण वाले के पाच नाम—कर्बुर १ चित्र २, किर्मीर ३, कल्माष ४, शवल ५ पु० । (८) ये विशेष्य निघ्न हैं। (९) गुण का एक नाम—गुण १ पु ।

॥ मतिवर्गसमाप्त ॥

हिन्दो—(१) वाणी के सात नाम—वाणी १, गिर् २, भारतो ३, भाषा ४, ब्राह्मी ५, वाच् ६ सरस्वती ७ ये सब स्त्री० । (२) आगम के तीन नाम—आगम १ पु०, सूत्र २, शास्त्र ३ नपु० । (३) वचन के चार नाम—लपित १ भाषित २ वचन ३ वचस् ४ नपु० । (४) क्रिया के तीन नाम—कृति १ क्रिया २ स्त्री०, प्रयत्न

त्रीणि स्वरस्य, २ द्वे इतिहासस्य, ३ द्वे तर्कस्य, ४ द्वे मीमांसाया ,५ चत्वारि धर्मग्रन्थस्य, ६ पञ्चलक्षण पुराणम्, ७ चतुर्दशविद्या भवन्ति, ९ अङ्गानि एकादश

त्रयः स्वरा उदात्ताद्या इतिहासः पुरातनम् ॥४॥
आन्वीक्षिकी[3] तर्कविद्या मीमांसा तु विचारणा ।
पुराणं धर्मशास्त्राणि स्मृतयो धर्मसंहिता ॥५॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
भूम्यादेश्चैव संस्थानं पुराणं पञ्चलक्षणम् ॥६॥
षडङ्गानि चतुर्वेदा मीमांसाऽऽन्वीक्षिकी तथा ।
पुराणं धर्मशास्त्रं च विद्या एताश्चतुर्दश ॥७॥
आचाराद्यागमा एकादशाङ्गानि जिनोदिताः ।

---

३ पु० । (५) सुबन्ततिगन्तो के चय को 'वाक्य' कहते हैं ।(६) वेद के दो नाम–श्रुति १ स्त्री०, वेद २ पु० । (७) त्रयी के दो नाम–त्रय १ पु०, त्रयी २ स्त्री० । यह ऋक् यजुष् सामन् रूप है ऋक् स्त्री, यजुष् सामन् नपुं० । (८) वेद के छ अङ्ग है उनके नाम–शिक्षा १ स्त्री०, कल्प २ पु०, व्याकरण ३, निरुक्त, ४ छन्दस् (छन्द) ५' ज्योतिष् ६ नपु० । (९) प्रणव के दो नाम–ऊँकार १ प्रणव०२ पु० ।

हिन्दी––(१) स्वर के तीन भेद–उदात्त १ अनुदात्त २ स्वरित ३ पु० । (२) इतिहास के दो नाम–इतिहास१ पु०,पुरातन २ नपु० । (३)तर्कविद्या के दो नाम–आन्वीक्षिकी१ तर्कविद्या २ स्त्री० । (४) मीमासा के दो नाम–मीमासा१, विचारणा

उपाङ्गानि द्वादश, २ मूलानि चत्वारि, ३ छेदानि चत्वारि एकमावश्यकम् ५ एते द्वात्रिंशद् आगम , ६ एता अपि चतुर्दश विद्या भवन्ति—

औपपातिकमारभ्य द्वादशोपाङ्गकानि च ॥८॥
चत्वारि मूलसूत्राणि छेदान्यपि तथैव च ।
अन्तर्भावश्यकं प्रोक्तं द्वात्रिंशत्ते प्रकीर्त्तिताः॥९॥
आकाशगामिनी विद्या परकायप्रवेशिनी ।
रूपान्तरकरी नाम्नी चतुर्थी स्तम्भनी मता ॥१०॥
मोहिनी पञ्चमी षष्ठी स्वर्गसिद्धिकरी खलु ।
रौप्यसिद्धिकरी ख्याता रससिद्धिकरी तथा ॥११॥
दमनी नवमी ज्ञेया स्याद् वशीकरणी क्रमात् ।
भूतदमनी च नाग दमनी द्वादशी मता ॥१२॥

---

२ स्त्री० । ५ लौकिक धर्मग्रन्थ के चार नाम—पुराण १ धर्मशास्त्र २ नपु०, स्मृति ३, धर्मसंहिता ४ स्त्री० । ६) पुराण के पाच लक्षण--सर्ग १, प्रतिसर्ग २ वंश ३ पु०, मन्वन्तर ४ भूम्यादि संस्थान ५ नपु० ।(७) चतुर्दशविद्या के नाम—वेदाङ्ग ६ नपुं०, वेद ४ पु०, मीमांसा ११ , आन्वीक्षिकी १२ स्त्री०, पुराण १३ धर्मशास्त्र १४ नपु० । (८) ग्यारह अङ्ग के नाम—आचाराङ्ग १,, सूत्रकृताङ्ग २, स्थानाङ्ग ३, समवायाङ्ग ४, भगवत्यङ्ग ५, ज्ञाताधर्मकथाङ्ग ६, उपासकदशाङ्ग ७ अन्तकृतदशाङ्ग ८, अनुत्तरोपपातिकदशाङ्ग ९, प्रश्नव्याकरण १०, विपाकश्रुत ११ नपुं०।

उपाङ्गानि द्वादश, २ मूलानि चत्वारि, ३ छेदानि चत्वारि एकमावश्यकम् ५ एते द्वात्रिशद् आगम ६ एता अपि चतुर्दशा विद्या भवन्ति—

औपपातिकमारभ्य द्वादशोपाङ्गकानि च ॥८॥
चत्वारि मूलसूत्राणि छेदान्यपि तथैव च ।
अन्त्यमावश्यकं प्रोक्तं द्वात्रिंशत्ते प्रकीर्त्तिताः॥९॥
आकाशगामिनी विद्या परकायप्रवेशिनी ।
रूपान्तरकरी नाम्नी चतुर्थी स्तम्भनी मता ॥१०॥
मोहिनी पञ्चमी षष्ठी स्वर्णसिद्धिकरी खलु ।
रौप्यसिद्धिकरी ख्याता रससिद्धिकरी तथा ॥११॥
दमनी नवमी ज्ञेया स्याद् वशीकरणी क्रमात् ।
भूतदमनी च नाग दमनी द्वादशी मता ॥१२॥

---

२ स्त्री० । ५ लौकिक धर्मग्रन्थ के चार नाम—पुराण १ धर्मशास्त्र २ नपु०, स्मृति ३, धर्मसंहिता ४ स्त्री० । ६) पुराण के पाच लक्षण--सर्ग १, प्रतिसर्ग २ वंश ३ पु०, मन्वन्तर ४ भूम्यादि संस्थान ५ नपुं० ।(७) चतुर्दशविद्या के नाम—वेदाङ्ग ६ नपुं०, वेद ४ पु०, मीमांसा ११ , आन्वीक्षिकी १२ स्त्री०, पुराण १३ धर्मशास्त्र १४ नपु० । (८) ग्यारह अङ्ग के नाम—आचाराङ्ग १,, सूत्रकृताङ्ग २, स्थानाङ्ग ३, समवायाङ्ग ४, भगवत्यङ्ग ५, ज्ञाताधर्मकथाङ्ग ६, उपासकदशाङ्ग ७ अन्तकृतदशाङ्ग ८, अनुत्तरोपपातिकदशाङ्ग ९, प्रश्नव्याकरण १०, विपाकश्रुत ११ नपुं०।

सर्वसम्पत्करी चान्त्या शिवदाख्या चतुर्दशी ।
लोकलोकोत्तराः सिद्धा विद्याश्चैता श्चतुर्दश ॥१३॥

१ कथाया द्वे नाम्नी २ सत्यकथाया एकम् ३ गूढार्थस्य एकम् ४ द्वे समस्यायाः ५ द्वे संग्रहस्य ६ चत्वारि वार्तायाः ७ द्वे लोकप्रवादस्य ८ पञ्च नाम्नः ९ एकम् अनेककर्तृकाह्वानस्य १० द्वे भूमिकायाः ११ द्वे विवादस्य १२ शपथस्यैकम्–

प्रबन्धेकल्पनायान्तु कथा साऽऽख्यायिका यदि ।
सत्यार्थेनोपलब्धा स्याद् गूढार्थे तु प्रहेलिका ॥१४॥

---

हिन्दी– (१) बारह उपाङ्ग के नाम–औपपातिक १, राजप्रश्नीय २, जीवाभिगम ३, प्रज्ञापना ४, जम्बूद्वीपप्रज्ञप्ति ५, चन्द्र प्रज्ञप्ति ६ सूर्यप्रज्ञप्ति ७, निरियावलिका ८ कल्पावतंसिका ९, पुष्पिका १०, पुष्पचूलिका ११, वृष्णिदशा १२ ये बारहहुवे । (२) मूलसूत्र के चार नाम–नन्दी १, उत्तराध्ययन २, दशवैकालिक ३, अनुयोगद्वार ४ । (३) छेदसूत्रके चार नाम–निशीथ १, बृहत्कल्प २, व्यवहार ३, दशाश्रुतस्कन्ध ४ । (४) अन्तिम सूत्र–आवश्यक १ । ये बत्तीस आगम आचाराङ्ग से लेकर आवश्यक पर्यन्त प्रमाणभूत उपलब्ध है । इन बत्तीस आगमों के साथ सूत्रशब्द जोडने पर नपुंसक लिङ्ग होते है । (६) ये भी चोदह विद्याएं है उनके नाम–आकाशगामिनी १, परकायप्रवेशिनी २, रूपान्तरकरी ३, स्तम्भिनी ४, मोहिनी ५, स्वर्णसिद्धि ६, रौप्यसिद्धि ७, रससिद्धि ८, रिपुदमनी ९, वशीकरणा १०, भूतदमनी ११, नागदमनी १२, सर्वसंपत्करी १३ शिवदायिनी १४ स्त्री० ।

समासार्थां समस्योक्ता संग्रहस्तु समाहृतिः ।
वार्ता प्रवृत्ति वृत्तान्त उदन्तोऽथ जनश्रुतिः ॥१५॥
किंवदन्ती भवेत्सत्या वाऽसत्या निर्णयो नहि ।
आख्याऽऽह्वे अभिधानं च नामधेयं च नाम च ॥१६॥
बहुकर्तृकमाह्वानं संहूतिरथ भूमिका ।
उपोद्घातो विरुद्धार्थो विवादः शपथः पुनः ॥१७॥

१ त्रीणि प्रश्नस्य, २ द्वे उत्तरस्य, ३ द्वे घोषणाया, ४ चत्वारि स्तुते, ५ द्वे द्विरुक्ते, ६ निन्दाया सप्तनामानि, ७ एक नाम परोक्षनिन्दाया', ८ एक ध्वनिविकारस्य, ९ चत्वारि कठारस्य, १० एक सभाषणस्य, ११ एकं नाम अर्थहीन वचनस्य

---

हिन्दी—(१)कथा के दो नाम—प्रबन्धकल्पना १कथा २स्त्री० । (२) सत्य कथा का एक नाम—आख्यायिका १ स्त्री० । (३) गूढार्थ का एक नाम— प्रहेलिका (प्रवह्लिका) १ स्त्री० । (४) समस्या के दो नाम—समासार्था १ समस्या २ स्त्री० । (५) सग्रह के दो नाम सग्रह १ पु, समाहृत २ स्त्री० । (६) वार्ता के चार नाम—वार्ता १ प्रवृत्ति २ स्त्री, वृत्तान्त ३ उदन्त ४ पु० । (७) लोक प्रवाद के दो नाम—जनश्रुति १ किंवदन्ती २ स्त्री० । (८) नाम के पाच नाम-आख्या १ आह्वा २ स्त्री० अभिधान ३ नामधेय ४ नाम ५ नपु० । (९) अनेक जनो द्वारा आह्वान का एक नाम—सहूति १ स्त्री० । (१०) भूमिका के दो नाम—भूमिका १ स्त्री० उपोद्घात २ पु० । (११) विवाद के दो नाम—विरुद्धार्थ १ विवाद २ पु० । (१२) सौगद का एक नाम—शपथ १ पु० ।

प्रतिज्ञावचने प्रोक्तः शास्त्रविद्भिः पुमानयम् ।
पृच्छा प्रश्नोऽनुयोगश्च प्रतिवाक्योत्तरे समे ॥१८॥
घोषणोच्चैस्तु घोषो यः स्तुतिः स्तोत्रं स्तवोनुतिः ।
आम्रेडितं द्विरुक्तं च पुनः पुनरुदाहृतम् ॥१९॥
परोक्षे निन्दनं लोके पृष्ठमासं नपुंसकम् ।
कुत्सा जुगुप्सानिन्दा स्त्री परिवादाऽपवादवत् ॥२०॥
आक्षेपो गर्हणायां स्यात् काकुः स्त्री विकृति र्ध्वनेः ।
कठिनं च कठोरं च कर्कशं परुषं वचः ॥२१॥
स्यात्सम्भाषणमालापः प्रलापोऽनर्थभाषणम् ।

---

हिन्दी–(१) प्रश्न के तीन नाम–पृच्छा १ स्त्री०, प्रश्न २, अनुयोग ३ पु० । (२) उत्तर के दो नाम–प्रतिवाक्य १, उत्तर नपु० । (३) घोषणा के दो नाम–घोषणा १ स्त्री०, घोष २ पु० । (४) स्तुति के चार नाम–स्तुति १ नुति २ स्त्री० । स्तोत्र ३ नपु० स्तव ४ पु० । (५) दुबारा कथन के दो नाम–आम्रेडित १, द्विरुक्त २ नपु० । (६) परोक्ष में निन्दा का एक नाम–पृष्ठमास १ नपु० । (७) निन्दा के सात नाम–कुत्सा १, जुगुप्सा २, निन्दा ३, गर्हणा ४ स्त्री० परीवाद ५ अपवाद ६, आक्षेप ७ पु० । (८) ध्वनि विकार का एक नाम–काकु १ स्त्री० । ९) कठोर के चार नाम–कठिन १,कठोर २, कर्कश ३, परुष ४ नपु० । १० सम्भाषणका एक नाम–आलाप १ पु० ।(११) अर्थशून्य वचन का एक नाम–प्रलाप १ पुं० ।

१ एक मिथ्यावचनस्य २ द्वे विलापस्य ३ द्वे मिथ्यास्तुते, ४ एकम् अलिखितसदेशस्य ५ एक प्रियसत्यवचनस्य, ६ एक हृदयग्राहि वचनस्य, ७ द्वे अनुचितवचनस्य, ८ एकं रतिसभाषणवचनस्य ९ द्वे असभ्यशब्दस्य १० द्वे सत्यविरुद्धस्य ११ त्रीणि सत्यस्य १२ चतुर्दशशब्दपर्याया —

मिथ्यावागपलापः स्याद् विलापः परिदेवनम् ॥२२॥
मिथ्यास्तुतौ चटुश्चाटु वाचिकं वचसाहृतम् ।
सूनृतं स्यात् प्रियं सत्य सङ्गत हृदयगमम् ॥२३॥
अवक्तव्यमवाच्यं स्या द्भणितं रतिकूजितम् ।
ग्राम्यमश्लीलवचनं वितथं त्वनृतं वचः ॥२४॥
''ऋतं तथ्यं च सत्ये स्याद्‌भ्वान निस्वाननिस्वनाः ।
स्वः स्वानः स्वनोनादो निनादनिनदौ ध्वनिः ॥२५॥
आरवाऽरावसंराव विरावाः स्युश्चतुर्दश ।

---

हिन्दी— १ मिथ्यावचन का एक नाम—अपलाप (१) निह्नव पु० । २ विलाप के दो नाम—विलाप १ पु०, परिदेवन २ नपु० । (३) चालाकी के दो नाम—चाटु १ चटु २स्त्री० । (४) अलिखितसन्देश का एक नाम—वाचिक १ नपुं० । (५) प्रिय सत्य का एक नाम—सूनृत १ नपु० । (६) हृदयग्राही वचन का एक नाम—सगत (आदेय) नपु० । (७) अनुचितवचन के दो नाम—अवक्तव्य १ अवाच्य २ नपु । (८) रति सभाषण का एक नाम—भणित (मणित) १ नपुं० । (९) असभ्य शब्द के दो नाम—ग्राम्य १ अश्लील २ नपु० (१०) सत्यविरुद्ध वचन के दो नाम—वितथ १ अनृत २ नपु० । (११)

१ द्वे बहुभि कृतस्य महाध्वने २ द्वे प्रतिध्वने॰ ३ षट् भूषण-ध्वने ४ वीणाध्वनौ प्रक्वणादय॰ ५ द्वे गानस्य ६ एकं विवक्षितार्थ-बोधकवाक्यस्य

कोलाहलः कलकलः प्रतिश्रुत् स्त्री प्रतिध्वनौ ॥२६॥
शिञ्जितं क्वाण निक्वाण क्वण क्वणन निक्वणम् ।
भूषणानां ध्वनौ चाऽपि वीणायाः प्रक्वणादय ॥२७॥
गीतंगाने विवक्षार्थबोधे चाऽऽलापको भवेत् ।

॥ इति वाणीवर्ग॰ समाप्त ॥

॥ अथ नृत्यवर्गः प्रारभ्यते ॥

नाट्यं तु नटन नृत्य ताण्डवं नर्तनं च यत् ।
नाटयं तौर्यत्रिकं नृत्यगीतवाद्यत्रयं त्विदम् ॥१॥

---

सत्य के तीन नाम-ऋत १ तथ्य २ सत्य ३ नपुं० । (१२) शब्द पर्याय के चौदह नाम—स्वान १ निस्वान २ निस्वन ३ (रव) ४ स्वान ५ स्वन ६ नाद ७ निनाद ८ निनद ९ ध्वनि १० आरव ११ आराव १२ सराव १३ विराव १४ पु० ।

हिन्दी—(१) एक समय में बहुतों से किये गये शब्द के दो नाम—कोलाहल १ कलकल २ पु० । (२)प्रतिध्वनि के दो नाम—प्रतिश्रुत् १ स्त्री० प्रतिध्वनि २ नपु० । (३) आभूषण शब्द के छ नाम शिञ्जीत १ क्वाण २ निक्वाण ३ क्वण ४ क्वणन ५ निक्वण ६ नपु । (४) वीणाध्वनि के नाम—प्रक्वण आदि सोपसर्गक उपक्वणादि पु० । (५) गान के दो नाम—गीत १ गान २ नपु० । (६) वक्ता के सङ्केतार्थ वाचक शब्द का एक नाम—आलापक १ पु० ।

॥००॥ वाणीवर्ग ॥ ।

रङ्गः[३]स्थान तु नाट्यस्य पूर्वरङ्ग उपक्रमः ।
निषाद ऋषभश्चैव गान्धारः षड्जमध्यमौ ॥२॥
धैवतः पञ्चम सप्त स्वरास्तन्त्री गता इमे ।
भरतादिमते रागाः षट् षडेषा च वल्लभाः ॥३॥
एकैकस्य च षट्त्रिंशद् रागिण्यो गुणिताश्च षट् ।
हिन्दोलकौशिकौ रागौ, रागौ भैरवदीपकौ ॥४॥
श्रीरागो मेघरागश्च रागः षट् नामत क्रमात् ।

---

हिन्दी-(१) नृत्य के पाच नाम—नाट्य १, नटन २ नृत्य ३, ताण्डव ४, नर्तन ५ नपुं० । (२) नाट्य के दो नाम (नृत्य गीतवाद्य रूप) तौर्यत्रिक १ नाट्य २ नपु० । (३) नृत्यस्थान का एक नाम—रङ्ग १ पु० । (४) नाटक के प्रारम्भ मे स्तुति पाठ करने वाला का एक नाम—ऊपक्रम १ पु० । (५) तन्त्रीस्वरो के सात नाम—निषाद १ ऋषभ २ गान्धार ३ षड्ज ४ मध्यम ५ धैवत ६ पञ्चम ७ पु० । (६) भरत आदि गायनाचार्य के मत से राग छ होते है उनके नाम—हिन्दोल १, कौशिक २ भरव ३दीपक ४ श्रीराग ५ मेघराग ६ पु० । (७) प्रत्येक राग के छ छ रागिणिया वल्लभाए है जैसे—भैरव रागकी धानसी १ मालसी २ रामकीरी ३ सिवुडा ४ आशावरी ५ भैरवी ६ स्त्री० । मल्लारराग की वेलावरी १ पुरवी २ कानडा ३ माधवी ४ कोडा ५ केदारिका ६ स्त्री० । श्रीराग को-गौरी १ कौमारिका २ गान्धारी ३ सुभगा ४ वैरागी ५ वेलियारी ६ स्त्री० । दीपक राग को—ललिता १ पञ्चमी २ तोड़ी ३ पटमञ्जरी ४ विभाषा ५ गुर्जरी ६ स्त्री० ।

केचिन्मालवमल्लारौ श्रीरागश्च वसन्तकः ॥५॥
हिन्दोलश्चाऽपि कर्नाट इति रागान् प्रचक्षते ।
उच्चैस्तारोऽथ गम्भीरे मन्द्रः स्यान्मधुरेऽस्फुटे ॥६॥
कलं स्तस्मिन् कले सूक्ष्मे काकली स्वर ईर्यते ।
एकतालस्तु गीतस्य सामस्त्ये लयवाद्ययोः ॥७॥
विपञ्ची वल्लकी वीणा सप्तभि परिवादिनी ।
तन्त्रीभि वाद्य वीणादि ततं स्यान्मुरजादिकम् ॥८॥
आनद्धं सुषिरं वेणुः कांस्यघण्टादिक घनम् ।
वाद्य वादित्रतोद्यानि चतुर्णां नाम गीयते ॥९॥

---

हिन्दोल राग की दीपिका १ देशकारी २ मायूरी ३ पाहिडी ४ मोरहाडी ५ वराडी ६ स्त्री० । कौशिक राग की कामोदा १ रामकेली २ भूपाली ३ नाटिका ४ गडा ५ कल्याणी ६ स्त्री० ।

हिन्दी–(१) कितनेक गायनाचार्यों के मत से छ राग हैं उनके नाम–मालव १, मल्लार २ श्रीराग ३ वसन्त ४ हिन्दोल ५ कर्नाट ६ । (२) उच्चस्वर को 'तार' कहते है पु० । (३) गम्भीर स्वर को 'मन्द्र' कहते है पु० । (४) मीठे और स्फुट स्वर को 'कल' कहते है पु० । (५) मीठा और अस्फुट सूक्ष्म कल को 'काकली' कहते है स्त्री० । (६) जिस गाना में गीतवाद्यलय समानरूप से सचारित हो उसे 'एकताल' कहते है पु० । (७) वीणा के तीन नाम—विपञ्ची १ वल्लकी २ वीणा ३ स्त्री० । (८) साततार वाली वीणा को 'परिवादिनी' कहते हैं स्त्री० (९) वाद्य-वीणादिको 'तत' कहते हैं नपुं० । मुरज आदि को 'आनद्ध' कहते

आङ्गयाऽऽलिङ्गयो-र्ध्वका भेदा मृदङ्गो मुरजः स्मृतः ।
आनकः पटहोऽस्त्रीस्यात्कदाचित्पु नपुंसकम् ॥१०॥
ढक्कास्त्रियां पुमान् ढोलः स्त्रीभेरी पुंसि दुन्दुभि ।
झर्झरो वाद्यभेदः स्याद् डमरुर्मड्डु डिण्डिमौ ॥११॥
लयः साम्ये भ्रकुसश्च भ्रूकुंसश्च भ्रुकुसकः ।
नर्तकः पुरुषः स्त्रीणां वेषधारी रसा नव ॥१२॥
शृङ्गार करुणा हास्याऽद्भुतरौद्रभयानकाः ।
वीभत्स वीर शान्ताश्च शृङ्गारः शुचिरुज्ज्वल ॥१३॥

---

है नपु० । (११) वेणु को 'सुषिर' कहते हैं नपु० । १२ कास्य घण्टा आदि को 'धन' कहते हैं नपु । (१३) इन चारों वाजों के तीन नाम—वाद्य १, वादित्र २, तोद्य ३ नपु० ।

हिन्दी—(१) चतुर्विध वाद्यो के तीन नाम—आङ्गय १, आलिङ्गय २, ऊर्ध्वक ३ पु० । (२) मृदङ्ग के दो नाम—मृदङ्ग १, मुरज २ पु० । (३) पटह के दो नाम—आनक १, पटह २ अस्त्री० । (४) उत्सववाद्य के चार नाम—ढक्का १ भेरी २ स्त्री० ढोल ३, दुन्दुभि ४ पु० । (५) ये चार वाद्य भेद है उनके नाम—झर्झर १, डमरु २ मड्डु ३ डिण्डिम ४ पु० । (६) गीतवाद्य पादादिन्यास और क्रियाकाल के समता को 'लय' कहते है पु० । (७) स्त्रीवेषधारी नाचने वाले पुरुष के तीन नाम—भ्रकुंस १, भ्रूकुस २ भ्रुकुंसक ३ पु० । (८) रस के नौ नाम—शृङ्गार १, हास्य २ अद्भुत ३, रौद्र ४, भयानक ५, वीभत्स ६, वीर ७, शान्त ८ करुणा ९ स्त्री० । (९) शृङ्गार के तीन नाम—शृङ्गार १, शुचि २, उज्ज्वल ३ पु० ।

ह्रीस्तु[2] व्रीडा त्रपा लज्जा सैवाऽन्यस्मादपत्रपा[3] ।
तितिक्षायां[4] क्षमाक्षान्ति रभिध्या[5] तु परस्पृहा ॥१९॥
ईर्षा[6] त्वीर्ष्या तितिक्षास्या दसूया[7]ऽलीकदूषणम् ।
द्वेषं[8] वैरो विरोधेऽथ शोको[9] मन्युः स्त्रियां तु शुक् ॥२०॥
पश्चात्तापो[10]ऽनुतापः स्या[11]च्छीलं तु चरितेऽमले ।
क्रोधे[12]ऽमर्षस्तथा कोपो रोषो रुट् क्रुध् स्त्रियामुभे॥२१॥

---

हिन्दी—(१) अनादर के आठ नाम—अवलेप १, तिरस्कार २, अनादर ३ अपमान ४ परिभव ५ पु. अवमानना ६, अवज्ञा ७ अवलेहना ८ स्त्री० । (२) लज्जा के चार नाम—ह्री १, व्रीडा २ लज्जा ३, त्रपा ४ स्त्री० । (३) पिता आदिके आगे लज्जा का एक नाम—अपत्रपा १ स्त्री । (४) क्षमा के तीन नाम—तितिक्षा १ क्षमा २ क्षान्ति ३ स्त्री० । (५) परद्रव्येच्छा का एक नाम—अभिध्या १ स्त्री० । (६) पर उन्नति नहीं सहने के तीन नाम—ईर्षा १, इर्ष्या २ अतितिक्षा ३ स्त्री० । (७) मिथ्यादोषारोपण का एक नाम—असूया १ स्त्री० । (८) वैर के तीन नाम—द्वेष १ पु वैर नपु २ विरोध ३ पु० । (९) शोक के तीन नाम—शोक १ मन्यु २ पु (मन्यु शब्द दैन्य क्रतु क्रोध बोधकनानार्थ है), शुच् ३ स्त्री. । (१०) पश्चात्ताप के दो नाम—पश्चात्ताप १, अनुताप २ पु० । (११) अमल (विमल) चरित्र को 'शील' कहते हैं पु० । (१२) क्रोध के छ नाम—क्रोध १, अमर्ष २ कोप ३, रोष ४ पु०, रुष् ५ क्रुध ६ स्त्री० ।

मूर्च्छायां कश्मलं मोहः कल्पान्तः प्रलयो मतः ।
संवेगश्चैव निर्वेदो वैराग्यं तु नपुंसकम् ॥२७॥
क्रन्दनं रोदने जम्भा जृम्भा जृम्भश्च जृम्भणे ।
स्वापः स्वप्नश्च निद्रायां शयनं च निगद्यते ॥२८॥
असम्यक्त्वं विसंवादं समे स्खलनरिङ्गणे ।
तन्द्री तन्द्रा प्रमीला स्याद् भ्रुकुटि भ्रुकुटी समे ॥२९॥
कम्पो वेपथु रुद्धर्षे तु क्षणो महः उत्सवः ।
स्वभावे प्रकृतिः स्त्रीस्या न्निसर्गः पुंस्युदाहृतः ॥३०॥
सन्तुष्टस्य च गुर्वादेः कृपादृष्टिः प्रसन्नता ।
॥ इति नृत्यवर्गः समाप्तः ॥७॥

हिन्दी-(१) उत्साह के दो नाम-उत्साह १, अध्यवसाय २ पुं० । (२) प्रमाद के दो नाम-प्रमाद१ पु०, अनवधानता २स्त्री (३) पसीना के तीन नाम-स्वेद १, घर्म २ निदाघ ३ पुं० । आकारगोपन के दो नाम-अवहित्था १ स्त्री० आकारगोपन २नपु (५) मूर्छा के तीन नाम-मूर्च्छा १ स्त्री० कश्मल २ नपु० मोह ३ पु० । (६) प्रलय को कल्पान्त कहते है । (७) वैराग्य के तीन नाम-सवेग १, निर्वेद २ पु० वैराग्य ३ नपु० । (८) रोदन के दो नाम-क्रन्दन १ रोदन २ नपु० । (९) जम्भाई के चार नाम-जम्भा १, जृम्भा २ स्त्री०, जृम्भ ३ पु०, जृम्भण ४ नपु० । (१०) निद्रा के चार नाम—स्वाप १, स्वप्न २, पु० शयन ३ नपु०, निद्रा ४ स्त्री० । असम्यक्त्व को 'विसवाद' कहते है पु० । पिच्छिल (कर्दम) भूमि से छिछलने के दो नाम-स्खलन १, रिङ्गण २ नपु० ।

।०।।अथ पातालवर्गः प्रारभ्यते ।।०।।

पातालस्यादधो लोको बलिसद्म रसातलम् ।
बिलं तु सुषिरं क्लीबं कुहरं विवरं स्मृतम् ।।१।।
रोकं छिद्रं रन्ध्रमथ श्वभ्रे गर्ताऽऽवटावुभौ ।
ध्वान्ते तमिस्रं तिमिर मन्धकारोऽस्त्रियां तम ।।२।।
अल्पे ध्वान्तेऽवतमसं घोरेऽन्धतमस तथा ।
सर्पस्तु भुजगो व्यालो द्विजिह्वोऽहि सरीसृपः ।।३।।
चक्षुःश्रवाः फणी काकोदरो भोगी भुजगमः ।
पन्नगः कुण्डली चक्री भुजगः पवनाशनः ।।४।।

---

।। नृत्यवर्ग समाप्त ।।

हिन्दी—(१) तन्द्रा के तीन नाम—तन्द्री १ तन्द्रा २ प्रमीला ३ स्त्री० । (२) भ्रकुटि के दो नाम—भ्रुकुटि भ्रकुटि २ स्त्री० । ३ कम्प के द' न म—कम्प १ बेपथु २ पु० । (४) उत्सव के पांच नाम—उद्धर्ष १ क्षण २ मु़ ३ उत्सव ४ उद्धव ५ पु० । (५) स्वभाव के तीन नाम—स्वभाव १ निसर्ग २ पु०, प्रकृति ४ स्त्री० (६) प्रसन्नता को 'कृपादृष्टि' कहते हैं स्त्री० ।

हिन्दी—(१) पाताल के चार नाम—पाताल नपु० अधो-लोक २ पु०' बलिसद्म ३, रसातल ४नपु० । बिल के सात नाम बिल १, सुषिर २, कुहर ३, विवर ४, रोक ५, छिद्र, ६, रन्ध्र ७ नपुं । (३) खड्ढे के तीन नाम—श्वभ्र १, गर्त, २, अवट ३ पु० । (४) सामान्य अन्धकार के पाच नाम—ध्वान्त २, तमिस्र २, तिमिर ३, तमस् ४ नपु०, अन्धकार ५ अस्त्री० । (५)

अशीविषो द्विरसनो लेलिहानश्च जिह्वग ।
विलेशयो दन्तशूको गूढपदुरगोऽपि च ॥५॥
गोकर्णः कञ्चुकी कुम्भी–नसो विषधरस्तथा ।
काद्रवेयास्तु नागास्युः शेषोऽनन्तस्तदीश्वरः ॥६॥
तिलित्सगोनसौ तुल्यौ सर्पराजस्तु वासुकिः
अलगर्दो दराधारोऽजगरो वाहस शयुः ॥७॥
स्याद् घोणो निर्विषः सर्प स्तुल्यौर्घर्मणधावनौ ।
राजीलोडुण्डुभो मालु–धानो मातुल पन्नगः ॥८॥

---

अल्प अन्धकार का एक नाम—अवतमम १ नपु० । (६) घोर-अन्धकार का एक नाम—अन्धतमस १ नपु० । (७) सर्प के अट्ठाईस नाम सर्प १ भुजग २ व्याल ३ द्विजिह्व ४ अहि ५ सरीसृप ५ चक्षु श्रवस् ७ फणिन् ८, काकोदर ९ भोगिन् १० भुजगम ११ पन्नग १२ कुण्डलिन् १३ चक्रिन् १४ भुजग १५ पवनाशन १६,

हिन्दी–आशोविष १७, द्विरसन १८, लेलिहान, १९ जिह्वग २०, बिलेशय २१, दन्तशूक २२ गूढपाद्, २३, उरग २४, गोकर्ण २५, कञ्चुकिन्, २६, कुम्भीनस २७, विषधर २८, (हरि) पु० । (१) फणा और पूंछवाले नराकार सर्पों के दो नाम—काद्रवेय १ नाग २ पु० । (२) नागस्वामी के दो नाम—शेष १ अनन्त २ पु० । (३) सर्प विशेष के दो नाम– तिलित्स १ गोनस २ पु० । (४) नागराज के दो नाम–सर्पराज, वासुकि २ पु० । (५) जल-स्थायी सर्प के दो नाम–अलगर्द १, दराधार २ पु० । (६)

शरीरमस्य भोगःस्याद् दंष्ट्रा त्वाशीः फणास्फटा ।
विषं तु गरलंक्ष्वेडो विषभेदा इमेऽस्त्रियाम् ॥९॥
हलाहलः कालकूट काकोलश्च प्रदीपनः ।
शौक्लिकेयोब्रह्मपुत्रो वत्सनाभश्च दारदः ॥१०॥
कञ्चुक स्यात्तु निर्मोक आहियं स्यात् त्रिलिङ्गकम् ।
व्यालग्राही जाङ्गुलिको विषवैद्याऽऽहि तुण्डकौ ॥११॥
नरको निरयः क्विश्व नारको दुर्गतिः स्त्रियाम् ।
तत्प्रभेदास्तु तपनो महारौरवरौरवो ॥१२॥

---

अजगर के तीन नाम—अजगर १, वाहस २, शयु ३ पु०। (७) निर्विष सर्पजाति वालों मे एक जाति का नाम—'घाण पु०। (८) दू रे जाति के दो नाम— घर्मण १ धावन २ पु०। (९) निर्विष द्विमुख सर्पों के दो नाम—राजील १ डुण्डुभ २ पु०। (१०) चित्र सर्प के दो नाम—मालुधान १, मातुलपन्नग २ पु०।

हिन्दी—(१) सर्प के शरीर का एक नाम—'भोग' पु०। (२) सर्पो के तालु में दात होता है उनके दो नाम—दंष्ट्रा १, आशी २ (अशिष्) स्त्री, इन दातो से काटने पर कोई नहीं जीता है। (३) सर्पफणा के दो नाम—फणा १ स्फटा २ स्त्री०। (४) विष के तीन नाम—विष १, गरल २ नपुं, क्ष्वेड ३ पु० विष के ८ भेद उनके ८ नाम—हलाहल (हालाहल) कालकूट २, काकोल ३, प्रदीपन ४, ब्रह्मपुत्र ५, शौक्लिकेय ६, दारद ७, वत्सनाभ ८ पु०। (६)सर्प से निकले हुए त्वचा के दो नाम—कञ्चुक १ निर्मोक २ पु०। (७) सर्प के प्रत्यङ्ग विकारों को 'आहिय' कहते हैं त्रिलिङ्ग। (८) सर्प के

कालसूत्र च सङ्घातोऽवीचि र्जीवास्तु नारकाः ।
सिन्धुर्वैतरणी प्रेता यातना घोरवेदना ॥१३॥
कष्टं प्रसूतिजं दुःख माभीलं कृच्छ्रमित्यपि ।
पीडाबाधा व्यथैतेषा त्रिपु ज्ञेयं विशेष्यगम् ॥१४॥
घर्मावंशा तृतीया तु शैला तुर्य्याऽञ्जना क्रमात् ।
रिष्टा षष्ठी मघा माघ-वती नरकभूमयः ॥१५॥
॥ इति पातालवर्गं समाप्त ॥

---

पकडने वालो के दो नाम—व्यालग्राहिन् १ जाङ्गुलिक २ पु० । (९) विषवैद्य के दो नाम—विषवैद्य १, आहितुण्डिक २ पु० । (१०) नरक के चार नाम—नरक १, निरय २, नारक ३ पु० दुर्गति ४ स्त्री । (११) नारक के भेद से नरक के ऊँचे छ नाम-तपन १, महारौरव २, रौरव ३, सघात ४, अवीचि ५ पु०, कालसूत्र ६ नपु० ।

हिन्दी-(१) नरकवासी जीवों को 'नारक' कहते हैं । (२) नरक नदी के दो नाम--सिन्धु १, वैतरणी २, स्त्री० । (३) भयानक दुःख के तीन नाम— प्रेता १, यातना २, घोरयातना ३, स्त्री० । (४) दुःख के आठ नाम—कष्ट, प्रसूतिज २ ,दुःख ३ आभील ४, कृच्छ ५, नपु०, पीडा ६, बाधा ७, व्यथा ८ स्त्री० । (५) नरक के ये सात नाम जैन शास्त्रो में प्रसिद्ध हैं उनके नाम—शैला १, रिष्टा २, अञ्जना ३,, वंशा ४, घर्मा ५, माघवती ६ मघा ७ स्त्री० ।

॥०॥ पातालवर्ग समाप्त ॥०॥

॥अथ जलवर्गः प्रारभ्यते॥

जलं स्यात्सलिलं वारि मेघपुष्पं दकं च कम् ।
पानीयमुदकं नीरं क्षीरं जीवनमम्बु च ॥१॥
कीलालममृतं तोयं पाथोऽर्णोऽम्भश्च शंवरम् ।
क्लीबमापो बहुत्वे स्त्री पयो वाः पुष्करं वनम् ॥२॥
नदी निर्झरिणी स्रोतस्वती द्वीपवती धुनी ।
तरङ्गिण्यापगा कूलंकषा शैवलिनी सरित् ॥३॥
सरस्वती स्रवन्ती च तटिनी ह्रदिनी तथा ।
निम्नगाऽमूः स्त्रियः सर्वा गङ्गा जह्नुसुताऽपि च ॥४॥
भागीरथी त्रिपथगा तथा विष्णुपदीति च ।
सूर्यात्मजा तु यमुना कालिन्दी शमनस्वसा ॥५॥

हिन्दी– (१) जल के चौबीस नाम—जल १, सलिल २ वारि ३, मेघपुष्प ४, दक ५, क ६, पानीय ७, उदक, ८, नीर ९, क्षीर १० जीवन ११, अम्बु १२, कीलाल १३, अमृत १४, तोय १५ पाथस् १६, अर्णस् १७, अम्भस् १८, सवर, १९, पयस् २०, वार २१ पुष्कर २२, वन २३, नपु०, आप २४, बहुवचनान्त स्त्री० । (२) नदी के पन्द्रह नाम—नदी १, निर्झरिणी २ स्रोतस्वती ३, द्वीपवती ४, धुनी, ५, तरङ्गिनी ६, आपगा ७, कूलङ्कषा ८, शैवलिनी ९, सरित् १०, सरस्वती ११ स्रवन्ती १२ तटिनी १३ ह्रादिनी १४ निम्नगा १५ स्त्री० । (३) गङ्गा के पाच नाम—गङ्गा ० जह्नुसुता २ भागीरथी ३ त्रिपथगा ४, विष्णुपदी ५ स्त्री । (४) यमुना के चार नाम—सूर्यात्मजा १, यमुना २ कालिन्दी ३ शमनस्वसा ४ स्त्री० ।

सोमंजा नर्मदा रेवा सैव मेकलकन्यका ।
करतोया सदा नीरा चन्द्रभागा सरस्वती॥६॥
शरावती वेत्रवती कावेर्याद्याः अनेकश ।
ब्रह्मपुत्रो नदः शोणः कुल्याऽल्पा कृत्रिमा सरित् ॥७॥
समुद्र उदधिः सिन्धु रब्धिर्जलधिरर्णव ।
सरस्वान् सागर पारा-वारो रत्नाकरस्तथा ॥८॥
यादः पतिरुदन्वांश्च सरित्पति रपांपतिः ।
भेदा लवणक्षीराऽऽज्य सुरे-क्षु-दधिवारयः ॥९॥

---

हिन्दी—(१) नर्मदा नदी के चार नाम—सोमजा १, नर्मदा ५, रेवा ३, मेकलकन्यका ४, स्त्री० (२) करतोया नदी के दो नाम —करतोया १ सदानीरा २ स्त्री० । (३) नदीविशेषो के पृथक् २ नाम—चन्द्रभागा १, सरस्वती २ शरावती ३, वेत्रवती ४ कावेरी २,स्त्री० । (४) नद के दो नाम—ब्रह्मपुत्र १ शोण (भद्र) (२) खोदकर बनाई गई नदी के तीन नाम कुल्या १, अल्पा २, कृत्रिमा स्त्री० । (६)समुद्र के चौदह नाम समुद्र १, उदधि १, सिन्धु ३, अब्धि ४, जलधि ५, अर्णव ६, सरस्वत् ७, सागर ८, पारावार ९, रत्नाकर १०, याद पति ११ उदन्वत् १२ सरित्पति १३, अपापति १४, पु (७) समुद्र के अनेक भेद—लवण १, क्षीर २ आज्य ३, सुरा ४, इक्षु ५, दधि ६, पु । (८) तरङ्ग के पाच नाम—तरङ्ग १, भङ्ग २ पुं, लहरी ३ स्त्री , वीचि ४, ऊर्मि ५ पु स्त्री ।

तरङ्ग भङ्गौ लहरी वीचिरूर्मिर्द्वयोर्मतः ।
जलेभ्रमिः स्यादावर्तः कल्लोलोल्लौ महोर्मिषु ॥१०॥
बिप्रुट् स्त्रियां पृषत्क्लीबे स्याद् विन्दुः पृषतः पुमान्
पुटभेदो भ्रमः पुंसि चक्रं च जलनिर्गमे ॥११॥
स्यात् त्रिलिङ्ग तटकूलं प्रतीरं तीर रोधसी ।
परतीरं तु पार स्या दवारमपर तथा ॥१२॥
सिन्धुमेले तु संभेदः प्रणाली जलपद्धतौ ।
अस्त्री द्वीपोऽन्तरीपंच जलाभ्यन्तस्तटे द्वयम् ॥१३
सैकतं सिकतापुञ्जे द्वे सिक्ताऽसिकते स्त्रियौ ।
जलक्रमेण संजाते तटे पुलिन मीरितम् ॥१४॥

---

(१) जलभ्रमि को 'आवर्त्त' कहते हैं पुं. (२) तरङ्ग के दो नाम–कल्लोल १ उल्ल २ पु (३) विन्दु के चार नाम–विप्रुष १ स्त्री., पृषत् २ नपु., बिन्दु ३, पृषत् ४ पु (४) चक्राकार से अधोगामी जल के तीन नाम–पुटभेद १ भ्रम २ पु, चक्र ३ नपु. (५) तट के पाच नाम–तट १ कूल २, प्रतीर ३, तीर ४, रोधस् ५ त्रिलिङ्ग (६) नदी आदि के परतट को 'परतीर' १, और 'पार' कहते है, पूर्वतटको 'अवार 'और 'अपर' कहते है नपु । (७) नदि सगम का एक नाम–सभेद १ पु ।(८) जलमार्ग का एक नाम–प्रणाली स्त्री. (९) जल के अन्तर्वर्त्ती द्वीप के दो नाम–द्वीप १ अन्तरीप २ पु. । (१०) सिकता समूह के एक नाम–सैकत १ नपु, ११ रेतो के दो नाम–सिक्ता १ सिकता २ स्त्री । (१२) जल धार से बने हुए तट को 'पुलिन' कहते है ।

परीवाहो जलोच्छ्वासः प्रवृद्धजलनिर्गतौ ।
ह्रदोऽगाधजले पुंसि जलाधारो जलाशये ॥१५॥
उदपानं स्त्रियां नस्या दन्धुः कूपः प्रहि पुमान् ।
विदारको भवेत्कूपो गर्तेऽम्बु प्राप्तये कृतः ॥१६॥
त्रिकातु नेमिः कूपस्य वीनाहो मुखबन्धनम् ।
देवखातमखातं स्यात्खात पुष्करिणी स्त्रियाम् ॥१७॥
पद्माकरस्तटाकोऽस्त्री तडागः सरसी सरः ।
कासारः पल्वल स्वल्प सरो वेशन्त इत्यपि ॥१८॥
आधारो जलाधान्यालवाला वापोऽऽवाळस्तु क्षुद्रजे ।
खेयं स्यात्परिखा वाप्यां दीर्घिक द्वे अमू स्त्रियाम्॥१९॥

---

हिन्दी–(१) प्रवृद्ध जल निर्गम के दो नाम–परिवाह, १ जलोच्छ्वास २ पु० । (२) अगाध जल को 'ह्रद' कहते हैं। (३) जलाधार को 'जलाशय' कहते है ।(४) कूप के पाच नाम उदपान १, अस्त्री० अन्धुर २, कूप ३, प्रहि ४, विदारक ५ पु । (५) कूप के अन्दर मे डोरी आदि बन्धन यन्त्र के दो नाम–त्रिका १, नेमि २, स्त्री० । (६) कूप के मुखबन्धन का 'विनाह' कहते हैं पु० । (७) अकृत्रिम जलाशय के दो नाम–देवखात १, अखात २, पु । (८) तालाव के आठ नाम–खात १, पद्माकर २, तटाक ३, तडाग ४, कासार ५, अस्त्री० पुष्करिणी ६. सरसी ७ स्त्री०, सरस् ८ नपु० । (९) अल्प (छोटे) तालाव के तीन नाम–पल्वल १, अल्पसरस् २, नपु०, वेशन्त ३ पु० ।

जलनील्यान्तु शैवाल वारिपर्णी तु कुम्भिका ।
सौगन्धिकं सिताम्भोजं कल्हारं यत् त्रिसन्ध्यकम् ॥२०॥
रक्तं तद् हल्लकं ज्ञेयं कमलेषु कुशेशयम् ।
पद्मारविन्दे नलिन शतपत्र स्त्रियं विना ॥२१॥
सहस्रपत्रमम्भोज-मब्जं राजीवमम्बुजम् ।
कञ्जं पङ्करुह पुण्डरीक तामरसोत्पले ॥२२॥
अम्भोरुहं सरसिजं सारसं सरसीरुहम् ।
रात्रीपद्मं कुवलयं कैरवं कुमुदं सिते ॥२३॥

---

हिन्दी-(१) बड़े बन्धों का एक नाम-जलधानी १, स्त्री० (आधार पु०)। (२) क्यारी के तीन नाम-आवाल १, आलवाल २, नपु०, आवाप ३ पु०। (३) नगर के चारो ओर बनाई हुई खाई के दो नाम-खेय १ नपु०, परीखा २ (खाता) स्त्री०।। बावडो के दो नाम-वापी १ दीर्घिका २ स्त्री०। (५) जलनाली का एक नाम-शैवाल (खेल, शैवल, शेवल) नपु० पु०। (६) पत्तेवाले शैवाल के दोनाम-वारिपर्णी १, कुम्भिका २ स्त्री०। (७) श्वेत कमल के तीन नाम-सौगन्धिक १, सिताम्भोज २, कल्हार। (८) रक्त कमल का एक नाम 'हल्लक'। (९) कमल के बीस नाम-कमल१, कुशेशय २, पद्म३, अरविन्द ४, नलिन५ शतपत्र ६, सहस्रपत्र ७, अम्भोज ८, अब्ज ९, राजीव १०, अम्बुज ११, कञ्ज १२, पङ्करुह १३, पुण्डरीक १४, तामरस १५, उत्पल १६, अम्भोरुह १७, सरसिज १८, सारस १९, सरसीरुह २०,। (१०) रात्रि मे खिलने वाले कमल के तीन नाम-कुवलय १, कुमुद २, कैरव ३।

नीले चेन्दीवरं कन्द स्त्वेषा शालूकं मुच्यते ।
पद्ममूल शिफाकन्दः करहाट उभौ पुमान् ॥२४॥
नलिन्यां बिसिनी प्रोक्ता कुमुदिन्या कुमुद्वती ।
नालानालं स्त्रिया क्लीबे रक्तः कोकनदोऽम्बुजः ॥२५।
मृणाल च मृणाली स्त्री बिसे किञ्जल्क केसरौ ।
वराटको बीजकोशे परागो रेणुरुच्यते ॥२६॥
पङ्कोऽस्त्री कर्दमः शादो जम्बालश्च निषद्वर ।

---

हिन्दी–(१) नीलकमल के एक नाम–इन्दीवर १ । (२) रात्रिविकासी कमलकन्द का एक नाम–'शालूक' येउन्तीस अस्त्री०। (३) पद्मकन्द के दो नाम–शिफाकन्द १ करहाट २ पु० । (४) कुमुदिनी के तीन नाम–नलिनी १बिसिनी२ पद्मिनी ३ स्त्री०। (५) कुमुद युक्त देश वा कुमुदलता के दो नाम–कुमुदिनी १ कुमुद्वती २ स्त्री० । (६) कमलनाल का एक नाम–नाला, स्त्री० नपु० । (७) रक्त कमल के तीन नाम–कोकन्द १ पु०, रक्तसरोरुह २, रक्तोत्पल ३ पु० नपु० । (८) जलजात कमल शैवाल आदि के तीन नाम–मृणाल १ नपु० मृणाली २ स्त्री०, विस ३ अस्त्री० । (९) कमल केसर के दो नाम–किञ्जल्क १, केसर २ पु० नपु (१०)पद्मबीजके दो नाम–वराटक १ बीजकोश २ पु० । (११) कमल आदि पुष्प धूली के दो नाम–पराग १ रेणु २ पु० । (१२) कीचड के पाच नाम–कर्दम १ शाद २ जम्बाल ३ निषद्वर ४ पु०, पङ्क ५ अस्त्री० ।

नौतार्ये त्रिषु नाव्य स्या–त्तरणिर्नौस्तरिः स्त्रियाम् ॥२७॥
पोतस्तु पुंसि वोहित्थं वहित्रं वहन च तत् ।
स्रोतः स्वतोऽम्बुसरणे प्लवकोलौ तथोडुपः ॥२८॥
काष्ठाऽम्बुवाहिनीद्रोणी गुणवृक्षस्तु कूपकः ।
अरित्र केनिपाते ऽथ नौदण्डे क्षेपणीस्त्रियाम् ॥२९॥
आतराऽतितरौस्यातां तरपण्येऽथ सेचनम् ।
सेकपात्रेऽथ नावोऽर्धेऽर्धनावं क्लीव लिङ्गकम् ॥३०॥
नाविकः कर्णधारः स्या त्पोतवाहो नियामकः ।
पारग स्त्रिषु पारीणो ऽवारपारीण इत्यपि ॥३१॥

---

हिन्दी–(१) नौका से पार करने योग्य जलनदी आदि को 'नाव्य' कहते हैं त्रिलिङ्ग। (२) नौका के सात नाम–तरणि १ तरि २ नौ ३ स्त्री०, पोत ४ पु०, वोहित्थ ५ वहित्र ६ वहन नपुं० । ३ अकृत्रिम जलप्रवाह को 'स्रोतस्' कहते है, नपुं । ४ तृणादि निर्मित नौका के तीन नाम–प्लव कोल २ उडुप ३ पुं । काष्ठ आदि से नौकाकार बनाई गई जलसेचनी का एक नाम–द्रोणी १ स्त्री० । पाल जिसमें बांधे जाँय उस काष्ठ के दो नाम–गुणवृक्ष १ कूपक २ पु० । नौका को चलाने वाले काष्ठ के दो नाम–अरति १ नपु, केनिपातक २ पु० । (८) नौका के किनारे मे बाधे गये चालन काष्ठ के दो नाम—नौ दण्ड १ पु०, क्षेपणी (क्षिपणो) २ स्त्री० । (९) नौका उतराई मूल्य के दो नाम–आतर १ अतितर २ पु० । (१०) नौका से ज़ल निकालने के पात्र के दो नाम–सेचन १ सेकपात्र २ नपुं० ।

सांयात्रिको द्वयोर्नौका वणिक् पोतवणिक्च सः ।
अभ्रिः काष्ठस्य कुद्दाले प्रसन्नाऽच्छौतु निर्मलः ॥३२॥
समलः कलुषोऽनच्छ अविलश्चेत्यमी समा ।
निम्नं गभीरगम्भीरे अगाधेऽस्ताध इत्यपि ॥३३॥
धीवरे दाश कैवर्तौ मत्स्याधानी कुवेणिका ।
मत्स्यवेधन यन्त्रे स्या-द्बडिशं वडिशास्त्रियाम् ॥३४॥
आनायो ना च जालं स्यान्मीने वैसारिणो झषः ।
पृथुरोमा च मत्स्यश्च विसारः शकली पुमान् ॥३५॥

---

हिन्दी–(१) अर्ध नौकाकार सेचनी को 'अर्धनाव' कहते हैं नपुं० । (२) नौका के सूत्रधार 'नाव चलाने वाले' को 'नाविक और कर्णधार' कहते हैं पु० । (३) नौका व्यवस्था सचालक के दो नाम—पोतवाह १, नियामक २ पु० । (४) पार जाने वाले के तीन नाम–पारग १ पारीण २, अवारपारीण ३ त्रिलिङ्ग । (५) नौका से पार करने वाले के तीन नाम–सायात्रिक १ अस्त्री०, नौकावणिक् २, पोतवणिक्, ३ पु० । (६) नौका से कचरा निकालने के पात्र के दो नाम—अभ्रि १ स्त्री०, काष्ठकुद्दाल २ पुं० । (७) निर्मल के तीन नाम–प्रसन्न १, अच्छ २ निर्मल ३ त्रिलिङ्ग । (८) मलिन जल के चार नाम–समल १ कलुष २ अनच्छ ३, अविल ४ त्रिलिङ्ग । (९) गंभीर के पाच नाम–निम्न १, गभीर २ गम्भीर ३ अगाध ४, अस्ताघ ५ त्रिलिङ्ग । (१०) धीवर के तीन नाम—धीवर १, दाश २, कैवर्त ३ पु० । (११) मछली रखने का जो पात्र है उसके दो नाम–मत्स्याधानी १, कुवेणिका २ स्त्री ।

सहस्रदंष्ट्रे पाठीनौ प्रोष्ठी तु शफरी द्वयोः ।
मद्गुरः शालराजीवौ शकुलस्तिमिरोहितौ ॥३६॥
झषास्तिमिङ्गिलोऽन्येतु यादांसि जलजन्तवः ॥
शङ्कुर्द्र शिशुमाराः स्यु स्तद्भेदे मकरादयः ॥३७॥
कच्छपः : कूर्म कुलीरः[10] कर्कटः पुमान् ।
ग्राहे ऽवहारो नक्रस्तु कुम्भीरेऽथ महीलता ॥३८॥

---

हिन्दी-(१) मत्स्यवेधन यन्त्र के दो नाम—बडिश १ नपु०, बडिशा २ स्त्री० । (२) जाल के दो नाम—आनाय १ पु०, जाल २ नपुं० । (३) मत्स्यो के सात नाम—मीन, १ वैसारिण २ झष ३ पृथुरोमन् ४ मत्स्य ५ विसार ६ शकलिन् ७ पु० । (४) बहुत दात वालि मछलियो के दो नाम—सहस्रदंष्ट्र १ पाठीन १ पु० । (५) मत्स्य विशेष के दो नाम——प्रोष्ठी १ शफरी २ स्त्री पु० । (६) पृथक् पृथक् एक एक मत्स्य जाति के नाम—मद्गुर १ शाल २ राजीव ३ शकुल ४ तिमि ५ रोहित ६ तिमिङ्गिल पु० । (७) जलचर मात्र 'यादस्' १ बहुवचन नपुं०, ज़लजन्तु २ पुं नपु० । (८) जलचर के अनेक भेद—शकु १ उद्र २ शिशुमार ३ मकर ४ पु० । (९) कच्छप के तीन नाम—कच्छप १ कमठ २ कूर्म ३ पु० । (१०) केवड़ा के दो नाम——कुलीर १ कर्कट २ पु० । (११) ग्राह के दो नाम——ग्राह अवहार २ पु० । (१२) मगर मच्छके दो नाम—नक्र १ कुम्भीर पु० । (१३) केंचुवा (अलसिया) ये जमीन पर चलने वाले लघु सर्पाकृति द्वीन्द्रिय कीट हैं इनके तीन नाम—महीलता १ स्त्री०, गण्डूपद २ किंचुलुक ३ पु० ।

सांयांत्रिको द्वयोर्नौका वणिक् पोतवणिक्च सः ।
अभ्रिः[6] काष्ठस्य कुद्दाले प्रसन्नाऽच्छौतु निर्मलः[7] ॥३२॥
समलः[8] कलुषोऽनच्छ अविलश्चेत्यमी समा ।
निम्नं[9] गभीरगम्भीरे अगाधेऽस्ताघ इत्यपि ॥३३॥
धीवरे[10] दाश कैवर्तौ मत्स्याधानी[11] कुवेणिका ।
मत्स्यवेधन यन्त्रे स्या-द्वडिशं बडिशास्त्रियाम् ॥३४॥
आनायो ना च जाल स्यान्मीने वैसारिणो झषः ।
पृथुरोमा च मत्स्यश्च विसारः शकली पुमान् ॥३५॥

---

हिन्दी-(१) अर्ध नौकाकार सेचनी को 'अर्धनाव' कहते हैं नपुं० । (२) नौका के सूत्रधार 'नाव चलाने वाले' को 'नाविक और कर्णधार' कहते हैं पु० । (३) नौका व्यवस्था सचालक के दो नाम—पोतवाह १, नियामक २ पु० । (४) पार जाने वाले के तीन नाम—पारग १ पारीण २, अवारपारीण ३ त्रिलिङ्ग । (५) नौका से पार करने वाले के तीन नाम—सायात्रिक १ अस्त्री०, नौकावणिक् २, पोतवणिक्, ३ पु० । (६) नौका से कचरा निकालने के पात्र के दो नाम—अभ्रि १ स्त्री०, काष्ठकुद्दाल २ पुं० । (७) निर्मल के तीन नाम—प्रसन्न १, अच्छ २ निर्मल ३ त्रिलिङ्ग । (८) मलिन जल के चार नाम—समल १ कलुष २ अनच्छ ३, अविल ४ त्रिलिङ्ग । (९) गंभीर के पाच नाम—निम्न १, गभीर २ गम्भीर ३ अगाध ४,अस्ताघ ५त्रिलिङ्ग । (१०) धीवर के तीन नाम—धीवर १,दाश २,कैवर्त ३ पु० । (११) मछली रखने का जो पात्र है उसके दो नाम—मत्स्याधानी १, कुवेणिका २स्त्री ।

सहस्त्रदंष्ट्रः पाठीनौ प्रोष्ठी तु शफरी द्वयोः ।
मद्गुरः शालराजीवौ शकुलस्तिमिरोहितौ ॥३६॥
झषास्तिमिङ्गिलोऽन्येतु यादांसि जलजन्तवः ॥
शङ्कुद्र शिशुमाराः स्यु स्तद्भेदे मकरादयः ॥३७॥
कच्छपः : कूर्मे कुलीरः कर्कटः पुमान् ।
ग्राहे ऽवहारो नक्रस्तु कुम्भीरेऽथ महीलता ॥३८॥

---

हिन्दी-(१) मत्स्यवेधन यन्त्र के दो नाम–बडिश १ नपुं०, बडिशा २ स्त्री० । (२) जाल के दो नाम–आनाय १ पु०, जाल २ नपुं० । (३) मत्स्यो के सात नाम–मीन, १ वैसारिण २ झष ३ पृथुरोमन् ४ मत्स्य ५ विसार ६ शकलिन् ७ पु० । (४) बहुत दात वालि मछलियो के दो नाम–सहस्रदंष्ट्र १ पाठीन १ पु० । (५) मत्स्य विशेष के दो नाम—प्रोष्ठी १ शफरी २ स्त्री पु० । (६) पृथक् पृथक् एक एक मत्स्य जाति के नाम–मद्गुर १ शाल २ राजीव ३ शकुल ४ तिमि ५ रोहित ६ तिमिङ्गिल पु० । (७) जलचर मात्र 'यादस्' १ बहुवचन नपुं०, जलजन्तु २ पुं नपु० । (८) जलचर के अनेक भेद–शंकु १ उद्र २ शिशुमार ३ मकर ४ पु० । (९) कच्छप के तीन नाम–कच्छप १ कमठ २ कूर्म ३ पु० । (१०) केवड़ा के दो नाम—कुलीर १ कर्कट २ पु० । (११) ग्राह के दो नाम—ग्राह अवहार २ पुं० । (१२) मगर मच्छके दो नाम–नक्र १ कुम्भीर पु० । (१३) केंचुवा (अलसिया) ये जमीन पर चलने वाले लघु सर्पाकृति द्वीन्द्रिय कीट हैं इनके तीन नाम–महीलता १ स्त्री०, गण्डूपद २ किंचुलुक ३ पु० ।

गण्डूपदः किंचुलुको निहाकास्यात्तु गोधिका ।
मुक्तास्फोटः पुमान् शुक्तिः स्त्रिजलौका तु रक्तपा ।३९।
क्षुद्रशङ्खे शङ्खनखाः शङ्खः कम्बुर्न तु स्त्रियाम् ।
भेके मण्डूक शालूर वर्षाभू दर्दुर प्लवाः ॥४०॥
शृङ्गी मग्दुर पुंयोगे भेकी स्त्री कमठी डुलिः ।

॥ इति जलवर्गः समाप्त ॥

॥ अथ अव्ययवर्गः प्रारभ्यते ॥

प्रादुराविः प्रकाशले श्वस्त्वनागत वासरे ।
परेद्यवि परश्वः स्या त्प्रपरश्वस्तदुत्तरे ॥१॥
दुष्ठु प्रोक्त जुगुप्साया सुष्ठु प्राशस्त्यवाचकम् ।
अधुना सम्प्रतीदानीं स्यादेतर्हि च साम्प्रतम् ॥२॥
समया निकषाऽऽसन्ने प्रभाते प्रातरुच्यते ।
सन्ध्याकाले स्मृतं सायं मुषा रात्र्यन्तमीरितम् ॥३॥

---

हिन्दी–[१] जलगोधिका के दो नाम–निहाका १ गोधिका २ स्त्री० । [सीप के दो नाम–मुक्तास्फोट १ पु०, शुक्ति २ स्त्री० । [३] जलोका [जोक] के दो नाम-जलोका १ रक्तपा २ स्त्री. [४] छोटे शखो के दो नाम–क्षुद्रशङ्ख १ शखनख २ पु० । [५]शख के दो नाम–शख १ कम्बु २ अस्त्री० [६] मेढ़क के छ नाम–भेक १ मण्डूक २ शालूर ३ वर्षाभू ४ दर्दुर ५ प्लव ६ पु० । [७] मद्गुर के पुयोग में शृङ्गी १ भेककी भेकी, कमठ को कमठी, डुलि दो नाम स्त्रीलिङ्ग ।

॥ जलवर्ग समाप्त ॥

[12]वतहर्षे विषादे च स्याद् यथार्थे [13]यथातथम् ।
क[14]च्चित्कल्याण पृच्छाया [15]मुद्योऽस्मिन्नहनीष्यते ॥४॥
ह्यो[1] गतेऽहन्य द्रुतेतु [2]शनैः [3]प्रायस्तु भूमनि ।
[4]अयि कोमल संबुद्धा [5]वोमा मेवं च सम्मतौ ॥५॥
स्वीकृता वस्तु पर्याप्ते [6]कामं [7]वा स्याद्विकल्पने ।
वाह्ये [8]बहिरदृष्टेऽ[9]स्तं [10]स्यादनेके च निश्चये ॥६॥
[11]उच्चै रूर्ध्वे [12]सनानित्ये,ऽ[13]धस्तान्नीचैः [14]पुनर्मुहुः ।
[15]मामास्माऽल निरोधे स्युः [16]पुरस्तादयतः पुरः ॥७॥
[17]न नो नहि निषेधेऽर्थे [18]हा खेदे[19]ऽहोतु विस्मये ।
[20]सत्रा साक सम सार्धं सहार्थे[21]धिक्च भर्त्सने ॥८॥

---

हिन्दी—[१] प्रकाश अर्थ मे दो शब्द—प्रादुस् १ आविस् । २ आगामी दिन में 'श्वस्' । [३] तीसरे दिन के बोधक 'परेद्यु', परश्व, दो शब्द है । [४] चौथे दिवस को 'प्रपरश्व' कहते है । [५] जुगुप्सा अर्थ मे 'दुष्टु' है । [६] प्रशस्तबोधक अर्थमें 'सुष्ठु' है । [७] अभी अर्थ में 'अधुना, सम्प्रति, इदानीम्, एतर्हि, साम्प्रतम्, है । [८] आसन्न 'समीपवर्ती' अर्थ मे 'समया निकषा' है । [९] सवेरा अर्थ में 'प्रभात, प्रातर्' है । [सन्ध्या अर्थ में 'सायम्' है । [११] रात्रिका अन्त बोधक 'उषा' है । [१२] हर्ष या विषाद अर्थ मे 'बत' है । [१३] यथार्थबोधक 'यथातथम्' है । [१४] कल्याण सूचक प्रश्न में 'कच्चित्' है । [१५] आज के दिन मे 'अद्य' है ।

(१) आज से अव्यवहित पूर्व दिन का बोधक 'ह्यस्' है ।

यदि चेद् अन्यपक्षे द्वे ह्यः[2] पूर्वेद्युः समावुभौ ।
एकदा[3] युगपत्सद्यः [4]सपद्यऽत्त्विहार्थकम् ॥९॥
तदानीं[5] तदा तस्मिन्काले ऽमुत्र[6] भवान्तरे ।
किञ्चिदीषन्मनागल्पे, स्याद् व्यर्थेतु मुधावृथा ॥१०॥
चिरं च चिररात्राय चिरस्य च चिराय च ।
चिराच्चिरे चिरेणाऽपि चिरार्थे योजिताः पुरा ॥११॥
कदाचिज्जातु तुल्येद्वे सहे साऽतर्किते मतम् ।
विनामध्यार्थयोः प्रोक्ता व्यन्तरेणाऽन्तरेऽन्तरा ॥१२॥
तिर्यगर्थे तिरः[3] साचि दिष्ट्या[4]ऽऽनन्देऽर्चने स्वे[5]ति ।

---

(२) मन्द अर्थ में 'शनैस्' है । (३) बाहुल्य अर्थ मे 'प्रायस्' है । (४) कोमल सबोधन में 'अयि' है । (४) स्वीकार अर्थ में 'ओम्, आम्, एवम्' है । (६) स्वीकृति अर्थ मे 'कामं' है । (७) विकल्प मे 'वा' है । (८) बाहिर् अर्थ मे 'बहिस्' है । (९) दृष्टि से परे को 'अस्तम्' कहते है । (१०) अनेक अर्थ मे और निश्चय मे 'स्यात्' है । (११) ऊपर अर्थ में 'उच्चैस्' है । (१२) नित्य अर्थ में 'सना' है । (१३) नीचे अर्थ में 'अधस्, नीचैस्' है । (१४) फिर से अर्थ बोधक 'पुनर् ,मुहुस्' है । (१५) निरोध अर्थ मे 'मामा स्म अल' है । (१६) आगे अर्थ में 'पुरस्तात्, अग्रतम् , पुरस्' है । (१७) निषेध अर्थ में 'न नो नहो' हैं । (१८) खेद अर्थ में 'हा' है । (१९) विस्मय में 'अहो' के प्रयोग होते है । (२०) सह के अर्थ में 'सत्रा, साक, सम, सार्धम्' हैं । (२१) भर्त्सन में 'धिक्' है ।

सम्बोधनेऽङ्ग[1] हे है भोः किलं[2] सम्भाव्य वार्तयोः ॥१३॥
उतां[3]हो किमुताऽऽहोच तु विकल्पे नुं[4] निश्चये ।
नीचाह्वाने त्वँ[5]रेरे च त्वँ[6]राच सम्भ्रमः समौ ॥१४॥
प्रसँ[7]ह्य तु हठार्थे स्या त्प्रतिक्षण मनुक्षणम् ।
वर्जने स्तो हिर्[8]रुक् नाना हेतौ ये[9]त्तद् यतस्ततः ॥१५॥
सुँ[10]दि शुक्ले दले कृष्णे वँ[11]दि संव्वँ[12]तु वत्सरे ।
अह्नीत्यर्थे दिवाँ[13] नक्तं[14] दोषा च रजनाविति ॥१६॥
स्वँ[15]यं स्यादात्मनेत्यर्थे तत्त्वेऽद्धाँ[16]ऽर्वाक् तथाऽवरे ।
निश्चये पादपूर्तौ च तुँ[17]हि च स्म ह वै इति ॥१७॥

---

(१) अन्य पक्ष के बोधक 'यदि, चेत्' हैं। (२) आज से अव्यवहित पूर्व दिन को 'ह्यस्, पूर्वेद्युस्' कहते हैं। (२) किसी समय अर्थ में 'एकदा, युगपत्, सद्यस् सपदि' है। (४) यहा पर अर्थ मे 'अत्र, इह' है। (५) उस समय का बोधक 'तदानीं, तदा' है। (६) परभव अर्थ में 'अमुत्र' है।(७) अल्प अर्थ में 'किञ्चित्, ईषत्, मनाक्' है। (८) व्यर्थ (विना प्रयोजन के) अर्थ मे 'मुधा-वृथा' हैं। (९) चिर (बहुत देर तक) अर्थ मे सात शब्द है—'चिरम् १, चिररात्राय २, चिरस्य३, चिराय४, चिरात्५, चिरे६, चिरेण७,। (१०) किसी समय अर्थ मे 'कदाचित्, जातु' है। (११) अचानक (अतर्कित) अर्थ में 'सहसा है। (१२) विना अर्थ मे और मध्य अर्थ में—'अन्तरेण, अन्तरे, अन्तरा' है। (१३) तिरछा अर्थ मे 'तिर्यक्, तिरस्, साचि' हैं। (१४) आनन्द अर्थ में 'दिष्ट्या' है। (१५) सत्कार सम्मान अर्थ में 'सु, अति' हैं।

साम्ये यथा तथा वे वाऽतिशयेऽतीव सुष्ठु च ।
झटित्यह्नाय मङ्क्षुद्रा गञ्जसा सपदि द्रुते ॥१८॥
हवि र्दाने स्वधा स्वाहाऽसाकल्पे चित् चनेत्युभे ।
तूष्णीं च तूष्णिका मौनेऽवश्यं नूनं च निश्चिते ॥१९॥
आम् एव निश्चये प्रातः प्रभातार्थे प्रगेऽपि च ।
तर्के वितर्के हु प्रश्ने ऊं ननु द्वे प्रयोजिते ॥२०॥

---

(१) सम्बोधन में– 'अङ्ग, हे, है, भोस् (पाट, प्याट्) हैं। (२) वार्ता संभाव्य (अनुनय, अरुचि) में 'किल' है। (३) विकल्प में 'उताहो, आहो, आहोस्वित् (किं किमूत) है। (४) निश्चय में 'नु' है। (५) नीच सम्बोधन में 'अरे, रे' हैं। (६)आवेग अर्थ में 'त्वरा, सम्भ्रमस्' हैं। (७) हलात् (बलजोरी जबर्दस्ती) अर्थ मे 'प्रसह्य, प्रतिक्षणम् , अनुक्षणम्' है। (८) वर्जन (निषेध) अर्थ में 'हिरुक्. नाना' है। (९) हेतु अर्थ में 'यत्, तत् , यतस्, ततस्' हैं। (१०) शुक्ल पक्ष अर्थ मे 'सुदि' है। (११) कृष्ण पक्ष अर्थ में 'वदि' है। (१२) वत्सर (साल)अर्थ में 'सवत्' है। (१३) अह्नि (दिवस) अर्थ में 'दिवा' है। (१४) रात्रि अर्थ में 'नक्तं, दोषा' है। (१५) अपने अपने क्रिया अर्थ में 'स्वयम्' है। (१६)नूतन काल में 'अद्धा, अर्वाक्, अत्र' है। (१७) निश्चय अर्थ में 'तु, हि, च, स्म, ह, वै' हैं।

(१) साम्य अर्थ में 'यथा, तथा, व, वा, इव' है। (२) अतिशय अर्थ में 'अतीव, सुष्टु' है। (३) झटपट (द्रुत) अर्थ में 'झटिति, अह्नाय, मङ्क्षु, द्राक्, अञ्जसा, सपदि' है। (४) हविर्दान

एषमोऽस्मिन् परुत् पूर्वे परार्यब्दे ततोऽपि च ।
पूर्वोत्तराऽपराऽन्याऽन्य-तरादितरतोऽधरात् ॥२१॥
पूर्वाद्यहःसु पूर्वेद्यु रादयः स्युः क्रमादिमे ।
रुद्रकोशे तु पूर्वेद्युः प्रातर्वा पूर्ववासरे ॥२२॥
परेद्यवि परेऽह्नि स्या दुभयेद्युर्दिनद्वये ।
वितथेस्तोमृषा मिथ्या सत्त्वेऽस्ति नमने नमः ॥२३॥

---

अर्थ में 'स्वधा, स्वाहा' है । (५) असाकल्प अर्थ में 'चित्, चन' हैं । (६) मौन अर्थ में 'तूष्णीं, तुष्णीकाम्' हैं । (७) निश्चित अर्थ में 'अवश्यं, नुनम्' है । (८) निश्चय अर्थ में— 'आम्, एवम्' हैं। (९) प्रभात अर्थ में 'प्रात', प्रगे' हैं । (१०) तर्क वितर्क अर्थ में 'हुं' है। (११) प्रश्नवाचक अर्थ में 'ऊ, ननु' है । (१२) इस वर्ष (चालु साल संवत्) अर्थ में 'ऐषमस्' है । (१३) वीते हुए (इस वर्ष से अव्यवहित पूर्व) वर्ष अर्थ में 'परुत्' का प्रयोग होता है । (१४) परत् से पूर्व वर्ष को 'परारि' कहते है। (१५) पूर्व १, उत्तर २, अपर ३, अन्य ४, अन्यतर ५, इतर ६, अधर ७ इन सात शब्दो से 'पूर्वे, अहनि' इत्यादि अर्थों में—

'पूर्वेद्यु, उत्तरेद्यु, अपरेद्यु, अन्येद्यु', अन्यतरेद्यु', इतरेद्यु, अधरेद्यु' निपातन से बनते है । (१)रुद्रकोष में 'पूर्वेद्यु' का प्रयोग 'प्रात' अथवा 'पूर्वदिवस' अर्थ में माना गया है । (२)पर दिवस अर्थ मे 'परेद्यवि' होता है । (३) जहा दोनों दिनो में ऐसा अर्थ हो, वहा 'उभयेद्यु (उभयद्यु)' होते है। (४) व्यर्थ (फिजूल)

सवतः परितो विष्वक् समन्ता दभितस्तथा ।

अन्ययवर्ग समाप्त ॥१०॥

अर्थ में 'मृषा, मिथ्या' है। (५) वर्तमान अर्थ में 'अस्ति' है। (६) प्रणाम अर्थ में 'नम' है। (७) सर्वत अर्थ में 'सर्वतस्, परितस्, विष्वक्, समन्तात्, अभितस्' ये पाच शब्द है।

॥ अन्ययवर्ग समाप्त ॥

॥ इति प्रथम काण्ड समाप्त ॥

—०—०—

॥ श्री ॥

## ॥ अथ द्वितीयकाण्डम् ॥

—०—

### ॥ अथ लोकवर्गः प्रारभ्यते ॥

लोकोऽयं जगती स्त्री स्याद् जगद् भुवनविष्टपम् ।
भरतैरवतानि स्यु र्विदेहाः कर्म भूमयः ॥१॥
अन्ये हैमवताद्याः स्युस्त्रिंशच्चाऽकर्मभूमयः ।
आर्यावर्तो जन्मभूमिः सत्तीर्थङ्कर चक्रिणाम् ॥२॥
आचारवेदिः पूण्याभू दक्षिणार्धस्य मध्यमः ।

(१) लोक के पाच नाम– लोक १ पुं०, जगती २ स्त्री०, जगत् ३ भुवन ४ विष्टप ५ नपु० । (२) पाच भरत वर्ष, पाच ऐरवत वर्ष, पाच महाविदेह हैं। ये पन्द्रह क्षेत्र कर्मभूमि है। पाच हैमवत, पाच हैरण्यवत, पाच हरिवर्ष, पाच रम्यक वर्ष, पाच देवकुरु, पाच उत्तरकुरु ये तीस अकर्मभूमि है, ये जुगलिक क्षेत्र ये

भूमि र्वसुमती क्षोणी रत्नगर्भा वसुन्धरा ॥३॥
जगती वसुधा गोत्राऽचलाऽनन्ता रसा च भूः ।
विश्वम्भरा च पृथिवी स्थिरा कुः सागरांबरा ॥४॥
महीधात्री च पृथ्वी च धरित्री धरणी क्षमा ।
धरा क्षोणिः क्षितिक्ष्मा गौरिला सर्वसहाऽवनिः ॥५॥
[२]मृत्तिकामृत् प्रशस्ता चेत् मृत्सा मृत्स्ना च सामता ।
ऊर्षः स्यात्क्षारमृत् सर्व सस्याढ्या योर्वरा च सा ॥६॥
स्थलं स्थलाऽकृत्तिमा तु स्थली चोषरमूषवत् ।

---

जो पाच पाच क्षेत्र है वे जम्बूद्वीप में एक एक और धातकीखण्ड द्वीप तथा पुष्करवरद्वीपार्ध में दो दो क्षेत्र होते है। [३] तीर्थङ्कर २४, चक्रवर्ती १२, वासुदेव ९, बलदेव ९, प्रतिवासुदेव ९, इन तिरसठ [६३] शलाका पुरुषों की जन्मभूमि के तीन नाम—आर्यावर्त १ पु०, पुण्यभू २, आचारवेदी ३ स्त्री०, यह दक्षिण भरतार्ध का मध्यखण्ड वैताढ्य से दक्षिण लवणोदधि से उत्तर, गङ्गा से पश्चिम, सिंधु से पूर्व में है।

हिन्दी-(१) भूमि के एकतीस नाम—भूमि १, वसुमति २, क्षोणी ३, रत्नगर्भा ४, वसुन्धरा ५, जगती ६, वसुधा ७, गोत्रा ८, अचला ९, अनन्ता १०, रसा ११, भू १२, विश्वम्भरा १३, पृथिवी १४, स्थिरा १५, कु १६, सागराम्बरा १७, मही १८, धात्री १९, पृथिवी २०, धरित्री २१, धरणी २२, क्षमा २३, धरा २४, क्षोणि २५, क्षिति २६, क्ष्मा २७, गो २८, इला

निर्जले मरुधन्वानौ खिलमप्रहतं त्रिषु ॥७॥
नीवृज्जनपदो देश विषयौ तूपवर्तनम् ।
शाद्वलः स्यादहरिते सपङ्क पङ्किलः स्थले ॥८॥
सवेतसे तु वेतस्वान् कुमुद्वान् कुमुदैर्युते ।
नड्वास्तु नड्वलः प्रोक्तः समौ चिक्कण पिच्छिलौ ॥९॥
स्थल नद्यम्बु वृष्टयम्बु जातसस्य सुरक्षितम् ।
नदीमातृकमेक तद् द्वितीय देवमातृकम् ॥१०॥
सुराज्ञि सति राजन्वान् देशोऽन्यत्र तु राजवान् ।
रजोयुवते सिकतिलः सैकतः शार्करोऽपि च ॥११॥

---

२९, सर्वसहा ३०, अवनि ३१ स्त्री० । [२] मिट्टी क दो नाम- मृतिका १, मृत् २ स्त्री० । [३] प्रशस्त मिट्टी के दो नाम—मृत्सा १, मृत्स्ना २ स्त्री० । [४] खारी मिट्टी का एक नाम— ऊष १ पु० । [५] उपजाऊ भूमि का एक नाम— उर्वरा स्त्री० । [६] स्थल शब्द के स्त्रीलिङ्ग में दो भेद है कृत्रिमा मे 'स्थला' और अकृत्रिमा में 'स्थली' इन भेदों से अन्यत्र नपुसकलिङ्ग। [७] ऊष युक्त स्थल के दो नाम—ऊषर १ ऊषवत् २ त्रिलिङ्ग।

हिन्दी-[१]मारवाड के दो नाम—मरु१, धन्वा [धन्वन्]२ पु। [२] नहीं जोते गये भूमि के दो नाम— खिल १, अप्रहत २ त्रिलिङ्ग। [३] जननिवास स्थल के दो नाम—नीवृत् १, जन-पद २ पु० । [४] ग्रामसमुदायरूप स्थानमात्र के तीन नाम— देश १, विषय २ पु०, उपवर्तन ३ नपु । [५] नूतनहरितघा-ससे शोभित देश के दो नाम— शाद्वल [शाड्वल] १, सादह

गोष्ठं स्याद्गोव्रजस्थानं गौष्ठीनं भूतपूर्वकम् ।
कच्छः पुमान् जलप्राय प्रदेशोऽनूपमित्यपि ॥१२॥
पुमान् परिसरः प्रान्ते पर्यन्तो जलबन्धने ।
सेतुः पुमान् स्त्रियामालि र्वल्मीके पु नपुंसकम् ॥१३॥
वामलूरश्च नाकुश्च वर्त्मत्वयनमेकपात् ।
वर्तनी पद्धतिः पद्या पदवी सरणिः सृतिः ॥१४॥
पुंसि मार्गोऽध्व पन्थानः सत्पथस्त्वर्चितोऽध्वनिः ।
सुपन्था अतिपन्थाश्च कापथे विपथोऽपथः ॥१५॥
अपन्थाश्च कदध्वाच दुरध्व व्यध्व कत्पथाः ।

---

रित २पु० । [६] पङ्कयुक्त प्रदेश के दो नाम—सपङ्क १, पङ्किल २पु० ।(७)वेत्र प्रदेश के दो नाम—सवेतस१, वेतस्वान्२ नपु० । [८] कुमुदवाले प्रदेश का एक नाम-कुमुद्वान् १ पु० । [९] नलतृण युक्त प्रदेश के दो नाम— नड्वान् १, नड्वल २ पु० । [१०] फिसलने वाला स्थल के दो नाम—चिक्कण १, पिच्छिल २ पु० । [११] नदी जल से सस्यशाली स्थल का एक नाम—नदीमातृक १ त्रिलिङ्ग । [१२] वृष्टि जल से सस्यशाली स्थल का एक नाम—देवमातृक १ त्रिलिङ्ग । [१३] न्यायी राजा के देश का नाम— राजन्वान् (राजन्वन्) त्रिलिङ्ग । [१४] अन्य का राजवान् [राजवत्] त्रिलिङ्ग । [१५] सिक्ता युक्त धुलिवाले प्रदेश के चार नाम—रजोयुक्त १, सिकतिल २, सैकत ३, शार्कर ४, पु० ।

हिन्दी (१) गोनिवास स्थान के दो नाम—गोष्ठ१, गोव्रज स्थान २ नपु० । [२] जहा भूतकाल मे गाएं रहती थी उस प्रदेश का

